पिप्पल्यां तया हि मूर्च्छितो बोध्यते। कार्त्तिकैकादश्यां तत्र हि हरेर्बोधनम्।

बोधि पु० बुध-इन्। अश्वत्थवृक्षे, समाधिभेदे च। ज्ञातरि त्रि०।

बोधितरु पु० कर्म०। अश्वत्थवृक्षे। बोधिद्रुमादयोप्यत्र पु०।

बौद्ध न० बुद्धेन प्रोक्तमण्। बुद्धप्रणीते निरीश्वरवादे शास्त्रे। तदधीयते इति पुनरण्। बौद्धागमाध्येतरि त्रि०। [पत्-त

व्युष उत्सर्गे विभागे च चु०उ०सक०सेट्। व्योषयति-ते अवुव्यु-

व्रण शब्दे भ्वा०पर०सक०सेट्। व्रणति। अव्रणीत्-अव्राणीत्।

ब्र(व्र)तति स्त्री० प्रतनोति प्र+तन-क्तिच् पृ० प्रस्य वः। लतायाम् व्रतमिव करोतीति णिच् क्तिच्। दन्त्योष्ठ्यादित्वमपि।

ब्र(व्र)ध्न पु० बन्ध-नक् ब्रधादेशः। सूर्य्ये, अर्कवृक्षे, शिवे, वृक्षमूले च। मेदिनीकरेण दन्त्योष्ठ्यवादित्वेन लिखनात्तथा त्वमपि तन्मूलं मृग्यम्।

ब्र(व्र)ह्मकूर्च न० 'अहोरात्रोषितोभूत्वा पौर्णमास्यां विशेषतः। पञ्चगव्यं पिबेत् प्रातः ब्र(व्र)ह्मकूर्च्चमिति स्मृतमि'त्युक्ते व्रतभेदे

ब्रह्मकोशी स्त्री० ब्र(व्र)ह्मणः कोशीव। अजमोदायाम्।

ब्र(व्र)ह्मचर्य्य न० ब्र(व्र)ह्मणे वेदलाभाय चर्य्यते चर-यत्। वेदज्ञानार्थमुपनयनोत्तराश्रमे, मैथुनराहित्ये च।

ब्र(व्र)ह्मचारिणी स्त्री० ब्र(व्र)ह्म चर्य्यतेऽनया चर-णिच् करणे ल्युट्-ङीप् ६त०। ब्र(व्र)ह्मयष्ट्यां भार्ग्याम्।

ब्र(व्र)ह्मचारिन् ब्र(व्र)ह्मणे वेदाय तद्ग्रहणाय चरति चर-णिनि। उपनयनानन्तरं प्रथमाश्रमयुक्तेषु विप्रादिषु त्रिषु वर्णेषु, करुणीवृक्षे, मैथुनराहित्यादि ब्र(व्र)ह्मचर्य्यव्रतधारिण्यां स्त्रियां च स्त्री०ङीप्। 'आसीता मरणात् क्षान्ता नियता ब्र(व्र)ह्मचारिणी'ति स्मृतिः। [नकवृक्षे

ब्र(व्र)ह्मजटा स्त्री० ब्र(व्र)ह्मणो जटेव संहतशाखत्वात्। दम-

ब्र(व्र)ह्मज्ञ त्रि० ब्र(व्र)ह्म वेदं, तुरीयं शुद्धचैतन्यं वा जानाति वेत्ति ज्ञा-क। वेदज्ञे, तुरीयशुद्धचैतन्यज्ञे च।

ब्रह्मज्ञान न० ६त०। त्रिगुणावच्छिन्नातीततुरीयशुद्धचैतन्यविषयज्ञाने विस्तरो वृहदभिधाने।

ब्र(व्र)ह्मण्य न० ब्र(व्र)ह्मणे वेदाय प्रभवति शुद्धचैतन्यज्ञानाय वा साधु ब्र(व्र)ह्मणोहितो वा यत्। विप्रवेदरक्षककर्त्तरि विष्णौ, 'नमो ब्रह्मण्यदेवाये'ति विष्णुप्रणाममन्त्रः। विप्रधर्म्मे ब्र(व्र)ह्मदारुवृक्षे च।

ब्र(व्र)ह्मतीर्थ न० ६त०। पुष्करतीर्थे, पुष्करमूले च।

ब्र(व्र)ह्मत्व न० ब्र(व्र)ह्मणो भावः त्व। ऋत्विग्विशेषस्य ब्र(व्र)ह्मणो धर्म्मे, शुद्धतुरीयब्र(व्र)ह्मभावे च।

ब्र(व्र)ह्मदण्ड पु० ६त० विप्रकृते अभिशापरूपे दण्डने 'ब्र(व्र)ह्मदण्डहता ये चे'ति स्मृतिः। विप्रस्य यष्टौ च।

ब्र(व्र)ह्मदर्भा स्त्री० ब्र(व्र)ह्मणो दर्भो यन्यनमस्याः। यमान्याम्

ब्र(व्र)ह्मदाय पु० ब्र(व्र)ह्मणि(णे)वा वेदाध्ययनसमाप्तौ, विप्राय वा राज्ञा दीयते दा कर्म्मणि घञ्। समावृत्तविप्राय देये धने 'ब्र(व्र)ह्मदायागतां भूमिं हरेयुर्ब्रा(व्रा)ह्मणीसुता' इति स्मृतिः। [कारे वृक्षभेदे।

ब्र(व्र)ह्मदारु पु० ब्र(व्र)ह्मणो विप्रस्य हितः दारुः अश्वत्था-

ब्र(व्र)ह्मन् न० वृह-मनिन् वृंहेर्नोऽच्चेति नकारस्याकारे रत्वम्। वेदे, तपसि, सत्ये, तत्त्वे, यथार्थे, तुरीये सर्व्वगुणातीते विशुद्धे चित्स्वरूपे च। हिरण्यगर्भे विप्रे ऋत्विग्विशेषे च पु०। उज्ज्वलदत्तेन दन्त्योष्ठ्यादित्वमेव साधितम् मेदिनीकरेण ओष्ठ्यादित्वेन कीर्त्तनात्तथात्वमपि किन्तु तन्मूलं मृग्यम्।

ब्र(व्र)ह्मनाल न० काश्यां मणिकर्णिकासमीपस्थे तीर्थभेदे।

ब्र(व्र)ह्मनिर्वाण न० ब्र(व्र)ह्मणि निर्वाणं निर्वृतिः। ब्र(व्र)ह्मभावलाभे सकलानर्थनिवृत्तिरूपे परमानन्दे।

ब्र(व्र)ह्मपर्णी स्त्री० ब्र(व्र)ह्मेव विस्तीर्णं मूलादारभ्य स्थितानि पर्णा-न्यस्याः ङीप्। पृश्निपर्ण्याम्।

ब्र(व्र)ह्मपवित्र पु० ब्र(व्र)ह्मेव वेदोक्तकर्म्मणि वा पवित्रः। कुशे

ब्र(व्र)ह्मपादप पु० ब्र(व्र)ह्मणः प्रियः वैदिककर्मयोग्यत्वात् विप्रब्र(व्र)ह्मचारिधार्य्यदण्डार्थत्वाद्वा। पलाशवृक्षे।

ब्र(व्र)ह्मपुत्र पु० ब्र(व्र)ह्मणः पुत्र इव कपिलवर्णत्वात्। विषभेदे, उत्तरदेशप्रसिद्धे नदभेदे, क्षेत्रभेदे च। सरस्वत्यां नद्यां स्त्री०। तस्याः पितामहजातत्वं पुराणप्रसिद्धम्।

ब्र(व्र)ह्मपुरी स्त्री० ६त० ब्रह्मोपासनास्थाने हृदये, तदाधारस्थाने सत्यलोके, काश्याञ्च।

ब्र(व्र)ह्मबन्धु पु० ब्र(व्र)ह्म विप्रो बन्धुरुत्पादको यस्य। विप्राचाररहिते निन्द्यकर्म्मकारिणि जात्या विप्रे, विप्रतुल्ये भट्टादौ च। [युज्ये च

ब्र(व्र)ह्मभूय न० ब्रह्मणो भावः भू-क्यप्। ब्र(व्र)ह्मभावे तत्सा

ब्र(व्र)ह्मयज्ञ पु० ब्र(व्र)ह्मनिमित्तकस्तदध्ययनतदध्यापनानिमित्तको यज्ञः। वेदाध्ययनाध्यापनादौ। [ह्माटि) वृक्षे

ब्र(व्र)ह्मयष्टि स्त्री० ब्र(व्र)ह्मणो यष्टिरिवालम्बनत्वात् (वामन

ब्र(व्र)ह्मरन्ध्र न०६त० उत्तमाङ्गस्थिते ब्राह्मप्राप्तिहेतुके छिद्रस्थाने। तच्छिद्रेण निष्क्रमणे हि जीवस्य ब्र(व्र)ह्मप्राप्तिः श्रूयते

ब्र(व्र)ह्मराक्षस पु० ब्र(व्र)ह्मा विप्रोऽपि कुकर्म्मभिः राक्षसः। राक्षसरूपतां प्राप्ते भूतभेदे 'अपहृत्य च विप्रस्वं भवति ब्र(व्र)ह्मराक्षस' इति मनुः।

ब(व)ह्मर्षि पु० ब(व)ह्मा विप्रः चतुर्मुखस्तस्यो वा ऋषिः वेदस्य स्रष्टा । वेदस्रष्टृषु वशिष्ठादिषु ऋषिषु ।

ब्रह्मर्षिदेश पु० ६त० । 'कुरुक्षेत्रञ्च मत्स्याश्च पाञ्चालाः शूरसेनकाः । एष ब(व)ह्मर्षिदेशो वै' इति मनूक्ते, कुरुक्षेत्रादिदेशचतुष्टये । [ब(व)ह्मस्वरूपे च ।

ब(व)ह्मलोक पु० ६त० ब्रह्माधिष्ठाने भुवने सत्यलोके तुरीय

ब(व)ह्मवर्चस न० ब(व)ह्मणा वेदाध्ययनेन तदनुष्ठानेन च कृतं वर्चः तेजः अच् समा०। वेदाध्ययनजन्ये तेजसि ब(व)ह्मवर्चसकामस्य कार्य्यं विप्रस्य पञ्चमे' इति मनुः ।

ब(व)ह्मवादिन् पु०ब(व)ह्म वेदं वदति पठति णिनि। वेदपाठके ब(व)ह्म शुद्धं चैतन्यं सर्व्वात्मकतया वदति वेत्ति वा वेदान्तप्रतिपाद्यसर्व्वात्मकब(व)ह्मणे शुद्धचैतन्यं वदति बोधयति ब(व)ह्मबोधके शास्त्रे । [न वाने ।

ब(व)ह्मविद्या स्त्री० ६त० शुद्धचैतन्यात्मकस्य ब्रह्मणोऽभेदे-

ब(व)ह्मवि(वि)न्दु पु० ब(व)ह्मणि वेदपाठकाले (वि)विन्दुः । वेदाध्ययनकाले निःसृतजलवि(वि)न्दौ । [संख्ये पुराणभेदे

ब(व)ह्मवैवर्त्त न० अष्टादशमहापुराणमध्ये अष्टादशसंख्यस्य

ब(व)ह्मशल्य पु० ब(व)ह्मेव सूक्ष्मं शल्यं कण्टकाग्रं यस्य । (बावला) वृक्षभेदे । [मन्त्रभेदे ।

ब(व)ह्मसंहिता स्त्री० वैष्णवाचारविज्ञाने अध्यायशतात्मके

ब्रह्मसायुज्य न० सह युनक्ति युज-क्विप् सयुक् तस्य भावः सायुज्यं ६त० । ब(व)ह्मभावे ।

ब(व)ह्मसू पु० ब(व)ह्माणं सूतवान् सू-क्विप् । चतुर्व्यूहात्मकस्य विष्णोर्मूर्त्तिभेदे अनिरुद्धे, तस्यावतारभेदे उषापतौ च

ब(व)ह्मसूत्र न० ब(व)ह्मणि वेदग्रहणकाले उचितं सूत्रम् । यज्ञोपवीते, ब्रह्मप्रतिपादके शारीरकसूत्रे च ।

ब्रह्महत्या स्त्री० हन-क्यप् ६त० । विप्रहनने ।

ब(व)ह्महन् त्रि०ब(व)ह्माणं हतवान् हन-क्विप्। विप्रहत्याकारिणि । 'ब(व)ह्महा न भवत्यन्यो ब(व)ह्महा वृषलीपतिः। यस्तस्यामाहितोगर्भः स तेन ब्रा(व्रा)ह्मणो हत' इत्युक्ते वृषलीपतौ, 'सुतोत्पतनजिह्वाच्च जीवोतिष्ठाङ्गलिध्वनि । गुरोरपि च कर्त्तव्यमन्यथा 'ब्रह्महा' भवेदित्यादिस्मृत्युक्तातिदेशिकब(व)ह्महत्यापापयुक्ते च पु० ।

ब(व)ह्महुत न० ब(व)ह्मणे विप्राय अतिथये हुतं दत्तम् । नित्यं गृहस्थकर्त्तव्यमखदशान्तर्गतेऽतिथिपूजनरूपे यज्ञभेदे

ब(व)ह्माञ्जलि पु० ब(व)ह्मणे वेदपाठाय अञ्जलिः गुरौ विनयाञ्जलिः, स्वरविशेषज्ञापनार्थं वा अञ्जलिः संकुचितपाणिः। वेदपाठार्थं गुरुनिकटे कार्य्ये विनयाञ्जली, स्वरविशेषार्थज्ञापनाय कृतसङ्कोचे पाणिद्वये च ।

ब्रह्माणी पु० ब(व)ह्माणम् आनयति जीवयति अन-णिच्-अण् पूर्व्व०णत्वम् । ब्रह्मशक्तौ 'हंसयुक्ते विमानेस्था साच सूत्रकमण्डलुः।आयाता ब(व)ह्मणः शक्तिः ब(व)ह्माणी साभिधीयते' इति चण्ड्यां । 'ब्रह्माणी ब(व)ह्मजननादि'ति पुराणम् । ब्रह्मशब्दात् ङीप् आनङ् चेति त्वपाणिनीयम्

ब(व)ह्माण्ड न० ६त० । 'तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् । तस्मिन् यज्ञे स्वयं ब(व)ह्मा सर्व्वलोकपितामहः' इति मनूक्ते ब(व)ह्मण उत्पादके अण्डाकारे भुवनकोषे 'ब(व)ह्माण्डभाण्डोदरभाग्यदिखण्डितचखण्डमेति वीरचरितम् । तत्प्रमाणस्वरूपादिकं तु वृहदभिधाने वक्ष्यते ।

ब(व)ह्मावर्त्त पु० 'सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम् । तं देवनिर्म्मितं देशं ब(व)ह्मावर्त्तं प्रचक्षते'इति मनूक्ते देशभेदे

ब(व)ह्मासन न०ब(व)ह्मणोध्यानार्थमासनम् । ईश्वरध्यानार्थे आसने स्वस्तिकपद्मासनादौ ।

ब(व)ह्मी स्त्री०ब्रह्मण इयम् अण् टिलोपः ङीप् पृ०न वृद्धिः । (बामनहाटी) शाकभेदे । [वृहदभिधाने ।

ब(व)ह्मेष्ट न० बेधाखरवलादिकारके वृतभेदे विस्तरो

ब(व)ह्मोपनेतृ पु० ब(व)ह्माणं विप्रमुपनयने तद्बेलदण्डहेतुत्वात् उप-नी-तृच्। पलाशवृक्षे 'विप्रस्य पालाशो दण्ड' इति स्मृतिः ।

ब्रा(व्रा)ह्म न० ब्रह्मण इदम्, तेन प्रोक्तम् वा अण् टिलोपः। अङ्गुष्ठमूले तीर्थे, तेन हि तीर्थेन द्विजाचमनं विहितमिति तस्य तत्सम्बन्धित्वम् 'प्राग्वा ब्रा(व्रा)ह्मेन तीर्थेन द्विजो नित्यमुपस्पृशे'दिति स्मृतिः। ब(व)ह्मणोक्ते अष्टादशपुराणान्तर्गते पुराणभेदे च । विवाहभेदे, नारदे च पु०। सरस्वत्यां, सोमलतायां, महौषधके (बामनहाटि) शाकभेदे च स्त्री० 'आवृत्तानां गुरुकुलात् विप्राणां पूजको भवेत् । नृपाणामक्षयो ह्येष ब्रा(व्रा)ह्मो धर्म्मो विधीयते' इति मनूक्ते राज्ञां धर्म्मभेदे पु० । मातृभेदे स्त्री० ङीप् 'ब्रा(व्रा)ह्मी नारायणी तथेति तन्त्रम् ।

ब्रा(व्रा)ह्मण पु०ब(व)ह्म वेदं शुद्धं परचैतन्यं वा वेत्त्यधीते वा अण्ब(व)ह्मणो जाताविति न टिलोपः। ब्रह्मणो मुखजातत्वात् ब्रह्मणोऽपत्यम् अण् तेन न टिलोपः । विप्रे जातिभेदे । पृक्कायां स्त्री० । 'ब(व)ह्म जानाति ब्राह्मण' इत्युक्ते परब(व)ह्मज्ञे त्रि०। स्त्रियां ङीप् तत्पत्न्यां स्त्री० ङीप् ।

ब्रा(व्रा)ह्मणब्रुव पु० ब्रा(व्रा)ह्मणं जातिमात्रे चात्मानं ब्रूते । 'विप्रसंस्कारयुक्तोऽपि नित्यं सन्ध्यादिकञ्च यः । नैत्तिकं च

नो कुर्य्यात् ब्रा(ब्रा)ह्मण्य्ं व उच्यते' इत्युक्ते कदाचारवति द्विजे । [स्वार्थे कन् । अत्रैव विप्रदण्डे च ।

ब्रा(ब्रा)ह्मणयष्टि स्त्री०६त०। वा ङीप् (वामनहाटी) वृक्षभेदे

ब्रा(ब्रा)ह्मण्य न० ब्रा(ब्रा)ह्मणानां समूहः भावो वा ष्यञ् । विप्रसमूहे । ब्राह्मणधर्म्मे, विप्रत्वे च ।

ब्रा(ब्रा)ह्ममुहूर्त्त पु०ब्र(ब्र)ह्मा देवतास्य अण् टिलोपः कर्म०। अरुणोदयात् प्राग्वर्त्तिनि 'रात्रेश्च पश्चिमे यामे मुहूर्त्तो ब्रा(ब्रा)ह्म उच्यते' इत्युक्तेः दण्डद्वयात्मके काले ।

ब्रा(ब्रा)ह्मीकन्द पुं० ६त० । ब्रा(ब्रा)ह्मा इव कन्दो यस्य । वाराहीकन्दे । [चत् अवोचत ।

ब्रू कथने अदा०उभ०द्विक० सेट् । ब्रवीति-आह ब्रूते । अवो-

## भ

भ न० भा-क । नक्षत्रे, मेषादिराशौ, ग्रहे च । शुक्राचार्य्ये पु० । भण-ड । भ्रमरे, भ्रान्तौ । छन्दोग्रन्थोक्ते आदिगुरुके अन्त्योपान्त्यलघुयुक्ते वर्णत्रिके च पु० । [च त्रि०।

भक्त पु०न०भज-क्त। अन्ने ओदने । भक्तियुक्ते तदात्मके, विभक्ते

भक्तदास पु० भक्तेन अन्नमात्रलाभेन दासः अङ्गीकृतदासभावः। पञ्चदशदासान्तर्गते दासभेदे। 'भक्तदासश्च विज्ञेय' इति स्मृतिः ।

भक्तमण्ड पु०न० ६त० । भक्तस्य निस्रावे (माड) ।

भक्ति स्त्री०भज-क्तिन्। सेवायाम् आराधनायां, तदेकाग्रचित्तवृत्तिभेदे, विभागे,गौण्यां वृत्तौ,उपचारे, अवयवे,भङ्ग्याम्, श्रद्धायाम्, रचनायाञ्च. 'भवति विरलभक्ति'रिति रघुः

भक्तियोग पु० भक्तिरेव योगः एकाग्रचित्तवृत्तिभेदः । तदेकाग्रचित्ततारूपे योगे । [भवात्मके रतिभेदे ।

भक्तिरस पु० भक्तिरेव रस आस्वाद्यः । भक्तिरूपे ध्येयानु-

भक्ष अदने चु०उभ०सक०सेट् । भक्षयति-ते अबभक्षत्-त भ्वादित्वमपीत्येके भक्षति अभक्षीत् ।

भक्ष्यकार पु० त्रि० भक्ष्यं करोति कृ-अण् । भक्ष्यपिष्टकादिविक्रयोपजीविनि आपूपिके ।

भक्ष्यपत्त्रा स्त्री० भक्ष्यं पत्त्रं यस्याः। ताम्बूल्याम् ।

भक्ष्यालाबू स्त्री० कर्म० । राजालाबाम् ।

भग पु०न० भज-घ । सूर्य्ये, अणिमाद्यष्टविधैश्वर्य्ये, वीर्य्ये, यशसि, श्रियां, ज्ञाने, वैराग्ये, योनौ, इच्छायाम् माहात्म्ये, यत्ने, धर्म्मे, मोक्षे, सौभाग्ये, कान्तौ चन्द्रे च। ज्योतिषोक्ते योनिनामदैवते पूर्वफल्गुनीनक्षत्रे गुह्यमुष्कयोर्मध्यस्थाने च पु० ।

भगदत्त पु० महाभारतप्रसिद्धे कामरूपदेशाधिपे नृपभेदे ।

भगन्दर पु० भगं गुह्यमुष्कमध्यस्थानं दारयति दृ-खच् मुम् च । स्वनामख्याते रोगभेदे।

भगवत् त्रि० भगं 'ऐश्वर्य्यस्य समग्रस्य, वीर्य्यस्य, यशसः, श्रियः ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गना'इत्युक्तम् ऐश्वर्य्यादिषट्कमस्त्यस्य मतुप् मस्य वः । ऐश्वर्य्यादियुक्ते परमेश्वरे, दुर्गायां स्त्री० ङीप् । 'भगवत्या कृतं सर्व्वमिति चण्डी ।

भगाङ्कुर पु० भगे गुह्यस्थानेऽङ्कुर इव । अर्शोरोगे ।

भगिनी स्त्री० भगं यत्नः पित्रादितो द्रव्यादानेऽस्य स्याः इनि । सोदरायाम् स्वसरि ।

भगीरथ पु० सूर्य्यवंश्ये दिलीपराजपुत्रे नृपभेदे । येन गङ्गा भूमितलमवतारिता । [र्घुवीरुपहृतमि'ति नाटकम् ।

भग्न त्रि० भन्ज-क्त । पराजिते, खण्डिते च भग्नं 'शम्भुधनु-

भग्नप्रक्रम पु०भग्नः प्रक्रमो यत्र। अलङ्कारोक्ते काव्यदोषभेदे

भङ्ग पु० भन्ज-घञ् । पराजये, खण्डे, भेदे, तरङ्गे, कौटिल्ये, भये, पत्त्ररचनाभेदे, गमने, जलनिर्गमे च । मातुल्याम्, शणाख्ये शस्ये, तिक्तायां (तेउडी) विजयाञ्च (भाङ्) स्त्री०

भङ्गि(ङ्गी) स्त्री० भन्ज-इन् इ० कुत्वम् वा ङीप् । विच्छेदे, कौटिल्ये, विन्यासे, कल्लोले, भेदे, व्याजे च ।

भङ्गुर त्रि० भन्ज-घुरच् । कुटिले, स्वयं भञ्जनशीले, नदीनां वक्रे च । प्रियङ्गौ, अतिविषायाम् च (आतइच) स्त्री० ।

भङ्ग्य न० भङ्गानां भवनं क्षेत्रं यत् । भङ्गाभवनयोग्ये क्षेत्रे ।

भज भागे सेवायाञ्च भ्वा० उभ०सक०अनिट् । भजति-ते अभाक्षीत्। भेजतुः भेजे।

भज पाके दाने च चु०उ०सक०सेट्। भाजयति-ते अबीभजत्

भज दीप्तौ चु०उभ०अक०सेट् इदित् । भञ्जयति-ते अबभञ्जत्-त

भजमान त्रि० भज-शानच् । न्यायागतद्रव्यादौ, विभाजके, सेवके च । [भाषणेऽयं घटा० । णिचि भटयति ।

भट पोषणे भ्वा०पर०सक०सेट् भटति। अभाटीत्-अभटीत् ।

भट पु० भट-अच् । योद्धरि, 'तन्नटचातुरीभृटी'ति नैषधम् । वीरे, म्लेच्छभेदे, नीचभेदे, रात्रिञ्चरे च । इन्द्रवारुण्यां (राखालशशा) स्त्री० ।

भटित न० भट-इत्र । शूलपक्वे मांसादौ (काबाब) ।

भट्ट पु० भट-तन् । स्तुतिपाठवृत्तिमति (भाट) जातिभेदे स्वामिनि, वेदाभिज्ञे पण्डिते च ।

भट्टार पु० भट्टं स्वामित्वमृच्छति ऋ-अण् । पूज्ये । संज्ञायां कन् । सूर्य्ये । [नाट्योक्तौ नृपे ।

भट्टारक पु० भट-भाषणे क्विप् तॄ-णिच्-ण्वुल् कर्म० ।

**भट्टिनी** स्त्री० भट्टं स्वामित्वमस्यास्ति इनि ङीप् । विप्रभार्य्यायाम्, नाट्योक्तौ अकृताभिषेकायां राज्ञः स्त्रियां च ।

**भड** परिभाषणे भ्वा०आ०सक०सेट् इदित् । भण्डते अभण्डिष्ट

**भड** कल्याणभाषणे चु०उ०सक०सेट् इदित् । भण्डयति-ते अबभण्डत्-त ।

**भड** पु० भडि-अच् पृ० नलोपः । वर्णसङ्करभेदे ।

**भण** कथने भ्वा०पर०सक०सेट् । भणति । अभाणीत्-अभणीत् । चङि वा ह्रस्वः । अबीभणत्-त अबभाणत्-त ।

**भणिति** स्त्री० भण-क्तिन् भ्वादित्वादिट् । कथने । 'गौडोर्वीशकुलप्रशस्ति भणिते'रिति नैषधम् ।

**भण्टाकी** स्त्री० भटि-षाकन् ङीष् । वार्त्ताक्याम्, वृहत्याञ्च

**भण्ट(ण्टू)क** पु० भटि-उक, ऊक वा । श्योनाकवृक्षे ।

**भण्ड** पु० भडि-अच् । अश्लीलवाक्यभाषके (भांड) 'त्रयो वेदस्य कर्त्तारो भण्डधूर्त्तपिशाचका' इति चार्व्वाकवाक्यम् ।

**भण्डिर(ल)** पु० भडि-इरच्, इलच् वा । शिरीषवृक्षे । इलजन्तस्तु । शुभे, शिल्पिनि, दूते च ।

**भण्डी** स्त्री० भडि-अच् गौरा०ङीष् । मञ्जिष्ठायाम्, शिरीषे च । स्वार्थे कन् ह्रस्वः । तत्रैवार्थे ।

**भण्डीर** पु० भडि-ईरन् । तण्डुलीयशाके, शिरीषवृक्षे च । गौरा० ङीष् । मञ्जिष्ठायाम् स्त्री० । [मञ्जिष्ठायाम् ।

**भण्डीरलतिका** स्त्री० भडि-ईरन् क्षुद्रा लता लतिका कर्म० ।

**भद** हर्षे, शुभकथने, प्रीतौ च भ्वा०आ०अक० सेट् इदित् । भन्दते अभन्दिष्ट । [भन्दत्-त ।

**भद** कल्याणकरणे चु०उ०सक०सेट् इदित् । भन्दयति-ते अब-

**भदन्त** पु० भदि-झच् नलोपः । बौद्धभेदे । पूजिते त्रि० ।

**भद्र** न० भदि-रक् नि० नलोपः । मङ्गले, मुस्तके, स्वर्णे च ज्योतिषोक्ते ववादितः सप्तमे करणे स्त्री० न० । महादेवे, वृषे, खञ्जने, कदम्बे, हस्तिजातिभेदे बलदेवे रामचन्द्रे, सुमेरुशैले, खुद्दीवृक्षे च पु० । ज्योतिषोक्तासु द्वितीयासप्तमीद्वादशीतिथिषु च स्त्री० । साधौ, श्रेष्ठे च त्रि० । स्वार्थे कन् । भद्रमुस्तके न० । देवदारुणि पु० ।

**भद्रकाशी** स्त्री० भद्राय काशते अच् गौ० ङीष् । भद्रमुस्तायाम्

**भद्रकुम्भ** पु० भद्रकारकः कुम्भः । पूर्णकुम्भे, जलपूर्णघटे ।

**भद्रगन्धिका** स्त्री० भद्रो गन्धोऽस्याः कप् अतइत्त्वम् । मुस्तके

**भद्रचूड** पु० भद्रा चूडा यस्य । (बङ्कासिज) वृक्षभेदे ।

**भद्रज** पु० भद्राय जायते जन-ड । इन्द्रयवे ।

**भद्रतरुणी** स्त्री० भद्रदायिका तरुणीव । कुब्जकवृक्षे ।

**भद्रतुरग** न० भद्रास्तुरगा यत्र । जम्बुद्वीपस्य नववर्षमध्ये वर्षभेदे भद्राश्वादयोप्यत्र न० ।

**भद्रदन्तिका** स्त्री० कर्म० स्वार्थे कन् । दन्तीवृक्षभेदे ।

**भद्रदारु** पु०न० । कर्म० । देवदारुवृक्षे ।

**भद्रनामिका** स्त्री० भद्रं मङ्गलं नामयति प्रापयति नम-णिच् ण्वुल् ? त्रायन्तीवृक्षे । [भाद्रपदासु ।

**भद्रपदा** स्त्री० ब०व० भद्रस्य वृषस्येव पदं यासाम् । पूर्व्वोत्तर

**भद्रपर्णी** स्त्री० भद्रं पर्णमस्याः अजादि० टाप् । कटम्भरावृक्षे । प्रसारिण्यां, गाम्भार्य्याञ्च ङीप् ।

**भद्रमल्लिका** स्त्री० कर्म० । मल्लिकाभेदे नवमल्लिकायाम् ।

**भद्रमुञ्ज** पु० कर्म० । शरभेदे ।

**भद्रमुस्तक** पु०कर्म० । नागरमुस्तके । भद्रमुस्ताप्यत्र स्त्री० ।

**भद्रयव** न० भद्रं यवइव । इन्द्रयवे । [ङीप् । गाम्भार्य्याम् ।

**भद्रवती** स्त्री० भद्राणि पर्णानि सन्त्यस्या मतुप् मस्य वः

**भद्रवर्म्मन्** पु० भद्रं वृणाति वृ-मनिन् । नवमल्लिकायाम् ।

**भद्रवला** स्त्री० भद्राय वलति चलति वल-अच् । (गन्धभादाल) लताभेदे, गन्धिकायां, माधवीलतायाञ्च ।

**भद्रवल्ली** स्त्री०कर्म०संज्ञायां कन् ह्रस्वः अतइत्त्वम् । (अनन्तमूल) । गोपवल्ल्याम् ।

**भद्रश्रय** न० भद्राय श्रीयते श्री-अच् । चन्दनवृक्षे ।

**भद्रश्री** पु० भद्रा श्रीर्यस्य । चन्दनवृक्षे ।

**भद्रालपत्रिका** स्त्री० भद्रायालति पर्य्याप्नोति अल-अच् तादृशं पत्रं यस्याः कन् अतइत्त्वम् । गन्धाल्याम् (गान्धाल)

**भद्राली** स्त्री० भद्रायालति पर्य्याप्नोति अल-अण् गौरा० ङीष् । गन्धाल्याम् (गान्धाल) [दीर्घः । कटफलवृक्षे ।

**भद्रावती** स्त्री० भद्र-अस्त्यर्थे मतुप् मस्य वः संज्ञायां पूर्व्वपद

**भद्राश्रय** पु० ६त० । चन्दने । [नृपासने ।

**भद्रासन** न०भद्राय लोकक्षेमायास्यतेऽत्र आस-आधारे ल्युट् ।

**भम्भराली** स्त्री०भमित्यव्यक्तशब्दस्य भरमालाति स्वल्पाति आ-ला-क गौ०ङीष् (डांश)मक्षिकायां । स्वार्थे कन् । तत्रैवार्थे

**भय** न०बिभेत्यस्मात् भी-अच् । भयहेतौ । भावेऽच् । दैन्यात्मके, परतः स्वानिष्टसम्भावनारूपे वा चित्तवृत्तिभेदे, नाटकप्रसिद्धे रसभेदे च । [रसभेदे, कुक्कुलविहगे च पु० ।

**भयङ्कर** त्रि० भयं करोति कृ-अच् मुम् च । भयजनके,

**भयनाशिनी** स्त्री० भयं नाशयति नश-णिच्-णिनि । त्रायमाणालतायाम् । [च । भयङ्करे त्रि०

**भयानक** पु० बिभेत्यस्मात् भी-आनक । व्याघ्रे, राहौ, रसभेदे

**भर** पु० भृ-अप् । अतिशये । कर्त्तरि अच् । भरणकर्त्तरि त्रि०

**भरण** न० भृ-ल्युट् । वेतने, पोषणे, धारणे च । अश्विन्य-

**भष** कुक्कुरशब्दे भ्वा० पर० सक० सेट् । भषति अभषीत्-अभाषीत् ।
**भषक** पु० भष-क्वुन् । कुक्कुरे । [अभषीत् ।
**भस** दीप्तौ अक० भर्त्से सक० जु० पर० सेट् । बभस्ति । अभासीत्-
**भस्त्रा** स्त्री० भस-त्रन् । चर्म्मप्रसेविकायाम् अग्निसन्धुक्षणे चर्म्मनिर्म्मिते यन्त्रभेदे । (यांता) गौ० ङीष् । अत्रैव । स्वार्थे कन् टाप् न ह्रस्वम् । भस्त्रकाप्यत्रैव ।
**भस्मक** न० भस्म करोति कृ-ड । (भस्मकीट) बहुभोजनकारके रोगभेदे । भस्मेव इवार्थे कन् । कलधौते रूप्ये, विडङ्गे च ।
**भस्मगन्धा** स्त्री० भस्मन इव गन्धोऽस्याः । रेणुकाख्यगन्धद्रव्ये । स्वार्थे कन् अत इत्त्वम् । तत्रैव । [गन्धद्रव्ये ।
**भस्मगन्धिनी** स्त्री० भस्मन इव गन्धोऽस्त्यस्या इनि । रेणुकाख्ये
**भस्मगर्भ** पु० भस्म गर्भे यस्याः । तिनिशवृक्षे, कपिलशिंशपायां च । रेणुकाख्यगन्धद्रव्ये स्त्री० टाप् ।
**भस्मन्** न० भस-मनिन् । (छाइ) दग्धगोमयादिविकारे ।
**भस्मरोहा** स्त्री० भस्मनि रोहति रुह-अच् । दग्धिकायाम् ।
**भस्मसात्** अव्य० भस्म कार्त्स्न्येन सम्पन्नं करोति भस्मन्+साति । साकल्येन भस्मरूपकरणे ।
**भा** दीप्तौ अदा० पर० अक० अनिट् । भाति । अभासीत् ।
**भा** स्त्री० भा-अङ् । टाप् । दीप्तौ ।
**भाक्त** त्रि० भक्तेः गौणीवृत्तेरागतः अण् । औपचारिके गौणीवृत्त्या बोधितेऽर्थे । भक्तमन्नमस्मै देयम् अण् । अन्नसम्बन्धिनि त्रि० ।
**भाग** पु० भज-भावे घञ् । भजने । कर्म्मणि घञ् । अंशे, इष्टवस्तुनोऽर्द्धे, एकदेशे, भाग्ये, 'त्रिंशांशकस्तथा राशेर्भाग इत्यभिधीयते' इति ज्योतिषोक्ते राशेः त्रिंशांशके च ।
**भागधेय** न० भाग+स्वार्थे धेय अभिधानात् नपुंसकत्वम् । भाग्ये । भागेन धीयतेऽसौ धा-यत् । राजदेये करे । भागो धीयतेऽस्मै धा-सम्प्रदाने यत् । दायादे सपिण्डे ।
**भागवत** त्रि० भगवतः, भगवत्या वा इदम् सोऽस्य देवता वा अण् भगवतः भगवत्या वा भक्ते, तत्सम्बन्धिनि च 'भग्नाः स्वयं भागवता भवन्तीत्यु'क्तः तयोः सम्बन्धिगुणवर्णने पुराणे उपपुराणे च न० 'यैनं स्तुतं भागवतं पुराणमि'ति पुराणम् तत्र कस्य पुराणत्वं कस्य चोपपुराणत्वं तद्वृहदभिधाने विस्तरेण निरूपयिष्यते । [दानादौ ।
**भागशस्** अव्य० भागं भागं ददातीत्याद्यर्थे शस् । एकैकभागस्य
**भागहर** त्रि० भागमंशं हरति अधिकारित्वेन गृह्णाति हृ-अच् । अंशग्राहिणि ।
**भागहार** पु० भज्यते इति भागो विभाज्यस्तस्य हारो हरणम् हृ-घञ् । अङ्कशास्त्रोक्ते भाज्यस्य विभागकरणे ।
**भागिन्** त्रि० भज-घिनुण् । अंशविशिष्टे । [स्त्री० ङीप् ।
**भागिनेय** पु० भगिन्या अपत्यम् ढक् । स्वसृसुते । तत्कन्यायां
**भागीरथी** स्त्री० भगीरथेन निर्द्दिष्टा आनीता तत्सम्बन्धिनी वा अण् । गङ्गायाम् । 'भागीरथीनिर्झरसीकराणा'मिति कु०
**भागुरि** पु० स्मृतिव्याकरणादिकर्त्तरि मुनिभेदे ।
**भाग्य** न० भज-ण्यत् कुत्वम् । शुभाशुभसूचके कर्म्मणि । भागः प्रयोजनमस्य यत् । भागवति त्रि० ।
**भाङ्गीन** न० भङ्गायाः विजयायाः भवनं क्षेत्रं खञ् । (भाङ) भङ्गाभवनयोग्ये क्षेत्रे । यञ् । भाङ्गमप्यत्र । [भाजत् त
**भाज** पृथक्करणे, अद० चु० उभ० सक० सेट् । भाजयति ते अब-
**भाजन** न० भाज्यतेऽनेन भाज-ल्युट् । पात्रे, आधारे, योग्ये च
**भाजी** स्त्री० भाज-कर्म्मणि घञ् नि० ङीष् । भृष्टव्यञ्जनभेदे ।
**भाज्य** त्रि० भाज्यते विभज्यते भाज-कर्म्मणि यत् । विभजनीये 'भाज्यो हरः शुध्यति यद्गुणः स्यादि'ति लीलावती ।
**भाटक** न० भट-पोषणे ण्वुल् । परगृहयानादेरुपभोगार्थं तत्स्वामिने दीयमाने धने । (भाडा)
**भाण** पु० भण-घञ् । 'भाणः स्याद्धूर्त्तचरित' इत्याद्युक्तलक्षणे दृश्यकाव्यभेदे सा०द० ६प० ।
**भाण्ड** न० भा-अण्डच्, भण-ड-स्वार्थे अण् वा । पात्रे, तैलाद्याधारे भाजने, (भाँड़) गृहभेदे, (भाड़ार) 'ब्रह्माण्डभाण्डोदरे'ति वीरचरितम् । वणिजां मूलधने, अश्वभूषायां, नदीकूलद्वयमध्ये पात्रे च । गर्द्दभाण्डे वृक्षे पु० । भण्डस्य भावः अण् । भण्डचरित्रे न० (भाड़ामि) ।
**भाण्डारिन्** पु० भाण्डमृच्छति ऋ-णिनि । (भाण्डारी) अन्नादिद्रव्यगृहेषु कृताधिकारे ।
**भाण्डिवाह** पु० भाण्डिं क्षुराद्याधारं (भाड़ि) वहति अण् । नापिते । भाण्डि+अस्त्यर्थे तच् । भाण्डिलोप्यत्र । [भेदे च
**भाण्डीर** पु० भण्ड-ईरच् पृ० । वटवृक्षे, वृन्दावनस्थे वटवृक्ष-
**भाति** स्त्री भा-क्तिन् । शोभायाम् ।
**भाद्र** पु० भद्राभिर्युक्ता पौर्णमासी भाद्री सा यस्मिन् मासे अण् । चैत्रादितः षष्ठे चान्द्रे मासे । तन्मासीयपौर्णमास्यां स्त्री० ङीप् । भद्रैव स्वार्थे अण् । पूर्वोत्तरभाद्रपदाख्यनक्षत्रे न० । 'भाद्रद्वये सागरे' इति ज्योतिषम् ।
**भाद्रपदा** स्त्री० ब०व० । भद्रस्येदं अण् भाद्रं भाद्रमिव पदमासाम् । अश्विन्यवधिके पञ्चविंशषड्विंशयोर्नक्षत्रयोः । तद्युक्ता पौर्णमासी अण् ङीप् । भाद्रमासस्य पौर्णमास्याम् साऽत्र मासे अण् । चान्द्रे भाद्रे मासि । [मितीप्रते

भाद्रमातुर पु० भद्रायाः सत्याः, मातुः अपत्यम् अण् उरच् ।
भानु पु० भा-नु । सूर्ये, अर्कवृक्षे, किरणे, प्रभौ, राजनि च ।
भानुफला स्त्री० भानुरिव दीप्तिमत् फलं यस्याः । कद-ल्याम् तस्याः मोचकस्य सूर्यतुल्यवर्णत्वात्तथात्वम् । [विषक
भानुमत् पु० भानुः किरणोऽस्त्यस्य मतुप् । सूर्ये । भानुमान्
भानुमती स्त्री० विक्रमादित्यनृपतेः भार्य्याम् ।
भाम क्रोधे भ्वा० आत्म० अक० सेट् । भामते, अभामिष्ट ।
भाम पु० भाम-अच् । क्रोधे, दीप्तौ च । कर्त्तरि अच् । सूर्ये । कोपनायां स्त्रियां स्त्री० टाप् । [क्रु
भामिनी स्त्री० भाम-णिनि । कोपयुक्तायां स्त्रियां, स्त्रीमात्रे
भार पु० भृ-घञ् । गुरुत्वपरिमाणे, तद्वति द्रव्ये विंशतितुला-परिमाणे (अष्टसहस्रतोलकपरिमाणे) च पु० ।
भारत न० भरतान् भरतवंश्यानधिकृत्य कृतो ग्रन्थः अण् भारः वेदादिशास्त्रेभ्योऽपि भारतमः अस्त्यस्य तत् वा । वेद-व्यासप्रणीते लक्षश्लोकात्मके ग्रन्थभेदे । भरतेन निर्मितं, तद्भेदे वा अण् । 'हिमाह्वं दक्षिणं वर्षं भरताय ददौ पिता । तस्मात्तु भारतं वर्ष'मित्युक्ते जम्बुद्वीपान्तर्गते वर्षभेदे । भरतस्य गोत्रापत्यम् अण् । भरतवंश्यस्य वंश्ये । भरतेन मुनिना प्रोक्तम् । भरतमुनिप्रणीते नाट्यशास्त्रादौ न० । तदधीते इत्यण् । नटे, अग्नौ च ।
भारती स्त्री० भृ-अतच् स्वार्थे अण् ङीप् । वाण्यां तदधिदेव-तायां सरस्वत्यां, वृत्तिभेदे, 'भारती संस्कृतप्रायो वाग्व्या-पारो नराश्रय' इति सा०द० उक्तलक्षणे पक्षिभेदे च ।
भारद्वाज पु० भरद्वाजस्य गोत्रापत्यम् अण् । गोत्रप्रवर्त्तके मुनिभेदे, द्रोणाचार्य्ये, अगस्त्यमुनौ, व्याघ्राटविहगे, बृहस्पतिसुते च । वनकार्पास्यां स्त्री० ङीप् । पु० । भारद्वा-जोऽप्यत्र । [कृकदले (तांक) ।
भारयष्टि स्त्री० भारस्य वहनार्था यष्टिः शाक० । भारव-
भारवाह(ह्) पु० भारं वहति अण्, क्विप् वा । भारवाहिनि । स्त्रुत् । भारवाहिकोऽप्यत्र ।
भारवि पु० किरातार्ज्जुनीयकाव्यकारके कविभेदे ।
भारवृक्ष पु० भारीभूतो वृक्षः । काष्ठीलगन्धवृक्षे ।
भारिक पु० भारं वहति भार+ठक् । भारवाहके ।
भार्गव पु० भृगोरपत्यम् तदीयमिदं वा अण् । शुक्राचार्य्ये, परशुरामे, धन्विनि, गजे च । तेन प्रोक्ता तेनाधीता ज्ञाता वा अण् । वेदमतिद्धे विद्याभेदे, पार्वत्यां लक्ष्म्यां दूर्वायां च स्त्री० ङीप् ।
भार्गी स्त्री० भर्गस्येदम् अण् । (वामनहाटि) वृक्षभेदे ।
भार्य्या स्त्री० भृ-ण्यत् । विधिवदूढायां स्त्रियाम् भरणीये त्रि०
भाल न० भा-लच् । ललाटे भ्रुवोरूर्द्ध्वभागे ।
भालदर्शन न० भाले दृश्यते कर्म्मणि ल्युट् । सिन्दूरे ।
भाललोचन पु० भाले लोचनं यस्य । शिवे । भालनेत्रादयोऽप्यत्र ।
भालाङ्क पु० भाल इवाङ्कोऽस्य, भाले अङ्को यस्य वा । शाक-भेदे, करपत्रेऽस्त्रे (करात्) रोहितमत्स्ये, महापुरुष-चिह्नयुक्ते पुरुषभेदे, शिवे, कच्छपे च ।
भालू(लु)क पु० भल्लूक+स्वार्थे अण् वा ह्र० ह्रस्वः । जन्तुभेदे भल्लूके । द्र० । भालुकोऽप्यत्र ।
भाव पु० भावयति चिन्तयति पदार्थान् भु० भू-अच् । नाट्योक्तौ नानापदार्थचिन्तके पण्डिते । भावयति प्रापयति हृदयग-मम् भू-णिच्-अच् । कृष्णावस्थाभेदके मानसविकारे शृङ्-गारादौ, व्यभिचारिभावे । भू-घञ् । शास्त्रोक्ते तिङर्थे वा क्रियारूपे धात्वर्थे, रागे आशये च । [उल्लादके च त्रि०
भावक पु० भाव-स्वार्थे कन् । मानसविकारे । पदार्थचिन्तके ।
भावत्क पु० भवतोऽयं ठक् । भवत्सम्बन्धिनि । [चिन्ताभेदे च
भावन न० भू-णिच्-ल्युट् । (चालत) फलभेदे, भावे ल्युट् । युच् । चिन्तायाम्, अधिवासने, ध्याने, पर्य्यालोचनायां, वैद्यकोक्ते औषधसंस्कारभेदे स्त्री० ।
भावबोधक भावस्य रत्यादेर्बोधकः अनुभावकः । रत्याद्यनु-भावके भ्रूभङ्गादिदेहचेष्टाविशेषे, मुखरागादौ च ।
भावानुगा स्त्री० भावं पदार्थमाश्रयं अनुगच्छति गम-ड । छायायाम् अभिप्रायानुगन्तरि त्रि० । [निश्चिते च
भावित त्रि० भू-णिच् । वासिते, प्राप्ते, शुद्धे चिन्तिते
भाविनी स्त्री० भावः हृदयचेष्टाभेदोऽस्त्यस्याः इनि । स्त्री-भेदे, स्त्रीमात्रे च । भू-णिनि । भविष्यत्कालवर्त्तिनि त्रि० स्त्रियां ङीप् ।
भावुक न० भू-उकञ् । मङ्गले, तद्वति त्रि० । नाट्योक्तौ भगिनीपतौ पु० । भवनशीले त्रि० 'उडुरङ्गो रविका-नुवि भावुका' इति भागवतम् । [न ह्रस्वः ।
भाष वचने भ्वा० आत्म० द्विक० सेट् । भाषते अभाषिष्ट । चङि
भाषा स्त्री० भाष-अ । वाक्ये, संस्कृतादिवाक्ये च । 'अष्टादश-भाषावारविलासिनीभुजङ्गः' इति सा०द० । व्यवहारे प्रतिवाद्युक्तवाक्ये 'यदावेदयते राज्ञे तद्भाषेत्यभिधीयते' इति स्मृतिः । [वाक्यरूपे प्रपञ्चे च ।
भाषापाद पु० कर्म्म० चतुष्पाद्व्यवहारे प्रतिवाद्युक्तके
भाषित न० भाष-भावे-क्त । कथने । कर्म्मणि-क्त । कथिते त्रि० । 'भाषितपुंस्का'दिति पाणिनिसूत्रम् ।

भाष्य न० 'सूत्रार्थो वर्ण्यते यत्र पदैः सूत्रानुसारिभिः। स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो जनाः' इत्युक्त लक्षणे सूत्रव्याख्याग्रन्थभेदे। कथनीये त्रि०।

भास दीप्तौ भ्वा०आत्म०अक०सेट्। भासते अभासिष्ट। चङि वा ह्रस्वः। अबीभसत् अबभासत्।

भास स्त्री० भास-सम्पदा० क्विप्। दीप्तौ, मयूखे इच्छायाञ्च।

भास पु०भास-घञ् अच् वा। दीप्तौ, गोष्ठे, कुक्कुरे शकुने च। 'यथार्थमद्ददत् वस्तु भासः काकोऽथवा भवेदिति स्मृतिः।

भासुर त्रि० भास-घुरच्। दीप्तिशीले, स्फटिके च। वीरे पु० कुष्ठौषधे न०। [(विल्लाति)

भासुरपुष्पी स्त्री० भासुराणि पुष्पाण्यस्याः। वृश्चिकाली

भास्कर पु० भासं करोति भास्+कृ-ट च् कस्त्वा०। सूर्ये, अग्नौ वीरे, अर्कवृक्षे सिद्धान्तशिरोमणिग्रन्थकर्त्तरि पण्डिते। स्वर्णे न०

भास्करप्रिय पु० ६त०। पद्मरागमणौ (चुनि)।

भास्वर त्रि०भास-वरच्। दीप्तियुक्ते, सूर्ये, दिने, अर्कवृक्षे च पु०। कुष्ठौषधे न० (कुड़)। [वीरे च। दीप्तिमति त्रि०।

भास्वत् पु० भास्+अस्त्यर्थे मतुप् मस्य वः। सूर्ये, अर्कवृक्षे,

भिक्ष लोभे लाभायोक्तौ सक० याचने द्विक० क्लेशे अक० भ्वा० आत्म० सेट्। भिक्षते अभिक्षिष्ट।

भिक्षा स्त्री० भिक्ष-अ। याचञायाम्।

भिक्षाक त्रि० भिक्ष-षाकन्। भिक्षाकारके। स्त्रियां ङीष्।

भिक्षाशिन् त्रि० भिक्षालब्धमश्नाति अश-णिनि। भिक्षा-लब्धोपजीविनि।

भिक्षु पु० भिक्ष-उ। सन्यासिनि चतुर्थाश्रमे।

भिक्षुक पु० स्त्री० भिक्ष-उकञ्। भिक्षोपजीविनि।

भिण्ड पु० स्त्री० भण-ड पृ०। कराकृतिरक्तवर्णपर्णे मर्त्तु-लाकारवीजे क्षुपभेदे। स्त्रीत्वे टाप्।

भित्त न० भिद-क्त नि० तस्य न नः। खण्डे।

भित्ति स्त्री० भिद-क्तिन्। गृहादेः कुड्ये (देयाल)। स्वार्थे कन्। तत्र, पङ्क्तौ च।

भिद द्विधाकरणे, विशेषकरणे च रुधा०उभ० सक० अनिट् भिनत्ति भिन्ते अभिदत् अभैत्सीत् अभित्त। [इदित्

भिद क्षरणे भ्वा०पर०सक० सेट् इदित्। भिन्दति अभि-

भिदा स्त्री०भिद-अङ्। विदारणे, द्वैधीकरणे, विशेषकरणे च।

भिदुर पु० भिद-कुरच्। वज्रे। इरत्। भिदिरमप्यत्र न०। प्लक्षवृक्षे पु०।

भिन्दिपाल पु० भिदि-विदारणे इन् भिन्दिं भेदनं पालयति पाल-अण्। हस्तक्षेप्ये नालिकास्त्रे, हस्तप्रमाणेऽस्त्रे च।

भिन्न पु० भिद-क्त। विदारिते, मिश्रिते, सङ्गते, अन्ये, प्रस्फुटिते च। [कर्कोट्याम्।

भिन्नगात्रिका स्त्री०भिन्नं विदारितं गात्रमवयवो यस्याः।

भिन्नपरिकर्म्मन् न० भिन्नस्य अयंसहितस्य परिकर्म्म संस्कारविशेषः। अङ्कशास्त्रोक्ते सांशस्य गुणभागादिसंस्कारे।

भिन्नभिन्नात्मन् पु०भिन्नप्रकारः प्रकारे द्वित्वम् तादृश आत्मा यस्य। चणके (छोला)। [ङीप्। पाषाणभेदके वृक्षे।

भिन्नयोजनी स्त्री० भिन्नं युज्यतेऽनया युज-करणे ल्युट्

भिल भेदने वा चुरा० पक्षे तु०पर०सक० सेट्। भेलयति-ते भिलति अबीभिलत् त अभेलीत्। [ऋ'ति स्मृतिः

भिल्ल पु०भिल-लक्। म्लेच्छजातिभेदे। (भिल) 'कैवर्त्तमेदभिल्ला

भिल्लतरु पु० भिल्लप्रियः तदुपजीव्यत्वात् तरुः। लोध्रे।

भिल्ली स्त्री० भिल लक् गौ० ङीष्। लोध्रे।

भिष रोगप्रतीकारे सौ०पर०सक०सेट्। भेषति अभेषीत्।

भिषक्प्रिय पु० ६त०। गुडूच्याम्।

भिषग्भद्रा स्त्री० ६त०। भद्रदन्तिकायाम्।

भिषज् पु० भिषति चिकित्सते भिष-अजिक्। वैद्ये रोगप्रतीकारे च

भिस्सटा स्त्री०भिस्सामन्नं टीकते टीक-ड पृ०। दग्धान्ने।पृ०। भिस्सिटा भिक्षिटा भिस्सिटा भिस्सिका इत्यादयोऽप्यत्रैवार्थे

भिस्सा स्त्री० भिद्-क्विप् सो-क पृ०दस्य सः। अन्ने। [भाव

भी भये जु०पर०अक०अनिट्। बिभेति अभैषीत् बिभयामास बि

भी भये अक० भरणे सक० क्र्यादि० वा घा० पर० अनिट्। भीनाति-भिनाति। अभैषीत्।

भी स्त्री० भी-सम्प० क्विप्। भये।

भीति स्त्री० भी-क्तिन्। भये, कम्पे च। क्त-भीतः। भययुक्ते त्रि०

भीम त्रि० बिभेत्यस्मात् भी-मक्। भयहेतौ। भयानकरसे, महादेवे, भीमसेने, अम्लवेतसे च पु०। दुर्गायां स्त्री० 'भीमा'देवीति विख्यातं तन्मे नाम भविष्यती'ति चण्डी।

भीमरथी स्त्री० 'सप्तसप्ततिमे वर्षे सप्तमे मासि सप्तमी। रात्रि भीमरथी नामे'त्युक्तायां रात्रौ।

भीमसेन पु० युधिष्ठिरानुजे मध्यमपाण्डवे, कर्पूरभेदे च।

भीमैकादशी स्त्री० भीमेनोपास्या एकादशी शाक०। माघ-शुक्लैकादश्याम्।

भीरु त्रि० भी-क्रु। भयशीले। शतावर्य्यां, कण्टकार्य्यां, शत-पदिकायां, छायायां योषिति च। स्त्री०वा ऊङ्। भययुक्तायां योषिति। [भययुक्ते त्रि०।

भीरुक पु० भी-क्रुकन्। शृगाले। व्याघ्रे। इक्षुभेदे च।

भीरुपत्त्री स्त्री० भीरूण्यपि पत्राणि यस्याः। शतमूल्याम्।

भीलु त्रि० भी-क्रु। भयशीले। क्रुकन्। तत्र। भल्लूके पु०।
भीषण पु० भीषयते भी-णिच्-ल्यु भीषादेशः। भयानकरसे, कुन्दुरुके, हिन्ताले, शल्लक्याञ्च। महादेवे-कपोते च पु०। गाढ़े दारुणे च त्रि०।
भीष्म पु० भी-मक् षुक् च। भयानकरसे। भयहेतौ त्रि०। गङ्गागर्भजे शान्तनुसुते स्वनामख्याते कुरुवंश्ये क्षत्रिये पु०।
भीष्मजननी स्त्री० ६त०। गङ्गायाम्। भीष्मसूप्रभृतयोऽप्यत्र।
भीष्मपञ्चक न० भीष्मेणोपदिष्टं पञ्चकम्। कार्त्तिकशुक्लैकादश्यादिषु पञ्चसु तिथिषु, तत्कर्त्तव्ये व्रतभेदे च।
भीष्माष्टमी स्त्री० ६त०। भीष्मस्य देहत्यागदिवसे माघशुक्लाष्टम्याम् अतस्तस्मिन् दिने सर्व्ववर्णैस्तस्य तर्पणं कार्य्यम्।
भुक्त त्रि० भुज-कर्म्मणि क्त। भक्षिते। भावे-क्त। भक्षणे न०।
भुक्तसमुज्झित त्रि० पूर्व्वं भुक्तं पश्चात् समुज्झितं त्यक्तम्। भोजनोत्तरं त्यक्ते अन्नादौ।
भुक्ति स्त्री०भुज-क्तिन्। भोजने भोगे, 'चञ्चागमो निम्बफलान भुक्तिः क्वापि यत्र नो' इति स्मृतिः।
भुक्तिप्रद पु० भुक्तिं भोगं भोजनं वा प्रददाति सत्वाचारभक्ष्यत्वात्। मुद्गे।
भुग्न त्रि० भुज-मोटने क्त। रोगादिना कुटिलीकृते। [भुग्नः
भुज मोटने तु० प० सक० अनिट्। भुजति अभौक्षीत्। क्त
भुज भक्षणे आ० पालने प०सक०रुधा० अनिट्। भुङ्क्तेऽन्नम् अभौक्षीत्। भूमिं भुनक्ति पालयति। 'दिवं मरुत्वानिव भोक्ष्यते महीमिति रघुः भुक्तः।
भुज पु०स्त्री०भुज्यतेऽनेन भुज-घञर्थे क। बाहौ, करे, त्रिकोणचतुष्कोणादिक्षेत्रस्य रेखाविशेषे लीलावत्यादौ प्रसिद्धे 'तथा यते तद्भुजकोटिघात' इति लीलावती।
भुजग पु० भुज-वक्रत्वे क भुजः कुटिलीभवन् सन् गच्छति गम-ड। सर्पे, अश्लेषानक्षत्रे च।
भुजगान्तक पु० ६त०। गरुडे। भुजगनाशनादयोऽप्यत्र।
भुजगाशन पु० भुजगान् अश्नाति अश-ल्यु। गरुडे, भुजगभक्षकादयोऽप्यत्र। [अश्लेषानक्षत्रे च।
भुजङ्ग पु० भुजः सन् गच्छति गम-खच् डिच्च। सर्पे, जारे,
भुजङ्गप्रयात न०। द्वादशाक्षरपादके छन्दोभेदे।
भुजङ्गम पु० भुजः कुटिलीभवन् सन् गच्छति गम-खच् मुम्। सर्पे, अश्लेषानक्षत्रे च। सीसके न०। [ङीष्। रास्नायाम्।
भुजङ्गाक्षी स्त्री० भुजङ्गस्येवाक्षि पुष्पं यस्याः षच् समा०
भुजङ्गाख्य पु० भुजङ्गस्य आख्या यस्य। नागकेशरे।
भुजशिरस् पु० ६त०। स्कन्धदेशे।
भुजान्तर न० भुजयोरन्तरं मध्यम्। क्रोड़े।
भुजिष्य पु०भुज-किष्यन्। दासे, रोगे, स्वतन्त्रे, हस्तसूत्रे च। दास्यां, वेश्यायाञ्च स्त्री०। [इयत्संख्यायाञ्च।
भुवन न० भवत्यत्र भू-क्युन्। जगति, जने, आकाशे, चतु-
भुवनकोष पु०भुवनस्य कोष इव। भूगोले ज्योतिषग्रन्थभेदे च
भुवर् अव्य० भू-असुन् किच्च। आकाशात्मके द्वितीये लोके।
भुवर्लोक पु० कर्म०। भुरादिसप्तलोकमध्ये द्वितीयलोके।
भू प्राप्तौ चु० आ० सक० सेट्। भावयते अबीभवत।
भू प्राप्तौ भ्वा०उ०सक०सेट्। भवति-ते अभूत् अभविष्ट।
भू शुद्धौ अक० चिन्तने मिश्रणे च सक० चुरा० उभ० सेट्। भावयति-ते अबीभवत्-त।
भू सत्तायां भ्वा०पर०अक०सेट्। भवति अभूत्। [यज्ञाग्नौ च
भू स्त्री० भू-सम्प० क्विप्। पृथिव्याम्, एकसंख्यायां, स्थानमात्रे-
भूकन्द पु० भुवः कन्द इव। (दुलकुड़ि)। महाश्रावणिकाख्ये
भूकदम्ब पु० भुवि कदम्ब इव। (कोकशिम) अलम्बुषके।
भूकदम्बक पु० भुवि कदम्ब इव कायति कै-क। यवान्याम्।
भूकम्प पु० ६त०। लोकानामनिष्टसूचके अद्भुतरूपे पृथिव्याः स्वयं चलने।
भूकुम्भी स्त्री० भुवि कुम्भीव। भूमिपाटलौ।
भूकुष्माण्डी स्त्री० भुवि कुष्माण्डीव। वदर्य्याम्।
भूकेश पु० भुवः पृथिव्याः केश इव। वटे, शैवले च।
भूखर्ज्जूरी स्त्री० भुवि लग्ना खर्ज्जूरी शाक० क्षुद्रखर्ज्जूर्य्याम् भूमिखर्ज्जूर्य्यादयोऽप्यत्र।
भूगोल पु० भूर्गोल इव। गोलाकारे भूखण्डे तत्प्रकाशकस्वरूपादिकं इहदधिधाने 'मध्ये समन्तादण्डस्य भूगोलो व्योम्नि तिष्ठति। बिभ्राणः परमां शक्तिं ब्रह्मणो धारणात्मिका'मिति सूर्य्यसिद्धान्तः।
भूच्छाया स्त्री० भुवश्छाया। सूर्य्यकिरणसम्पर्कवशात्। जायमाने राहुग्रहाभिधाने तमसि अन्धकारे।
भूजम्बू स्त्री०भुवो जम्बूरिव स्वादुत्वात्। गोधूमे, विकङ्कतफले च (बइचि) ६त०। क्षुद्रजम्ब्वाम्। भूमिजम्ब्वादयोऽप्यत्र स्त्री०
भूत न० भू-क्त। न्याय्ये, उचिते, पृथिवीजलतेजोवायुगगनरूपेषु गन्धादिविशेषगुणवत्सु द्रव्येषु, जन्तुमात्रे, पदार्थे, सात्त्विके, 'भूतमप्यनुपन्यस्तं हीयते व्यवहारत' इति स्मृतिः तत्त्वार्थख्याने च 'स्कन्दं निरस्य भूतेने'ति स्मृतिः। पिशाचादौ, कुमारे, योगीन्द्रे, कृष्णपक्षे प्राणिनि च पु०। अतीते हृते, प्राप्ते, सत्ये च त्रि०। कृष्णचतुर्दश्यां स्त्री०टाप्
भूतकेश पु० भूतानां केश इव। (भूतकेश) मालवे तृणभेदे

स्त्रीत्वमपि, सा च तत्र, शेफालिकायां च टाप्। नीलसिन्धुवारे ङीप्

**भूतगन्धा** स्त्री० भूतः प्रभूतः गन्धो यस्याः। मुरानामगन्धद्रव्ये

**भूतघ्न** पु० भूतं हन्ति हन-टक्। भूर्ज्जपत्रे तद्धारणे हि बालग्रह-भूतादिनिवारणम्। भूतं प्राप्तं गर्भं हन्ति अध'करोति लशुने, उष्ट्रे च। भूतनाशके त्रि०। तुलस्यां स्त्री० ङीप्।

**भूतचतुर्द्दशी** स्त्री० भूतप्रिया चतुर्द्दशी तदुद्देशेन तस्यां दीप-दानात्। आश्विनकृष्णपक्षचतुर्दश्यां दीपान्विताम।वा-स्यापूर्व्वतिथौ यमचतुर्दश्याम्।

**भूतजटा** स्त्री० भूतस्य जटेव। जटामांस्याम्।

**भूतद्राविन्** पु० भूतान् द्रावयत्यपसारयति द्रु-णिच्-णिनि। रक्तकरवीरवृक्षे, भूताङ्कुशवृक्षे, शाखोटवृक्षे च।

**भूतद्रुम** पु० भूत इव द्रुमः। श्लेष्मातकवृक्षे। भूतवृक्षादयोऽप्यत्र

**भूतधात्री** स्त्री० भूतानि जन्तून् धारयति धा-तृच् ङीप्। पृथिव्याम्। [वटुकस्तोत्रम्। भूतेशभूतपत्यादयोऽप्यत्र

**भूतनाथ** पु० ६त०। शिवे, वटुकभैरवे च। 'भैरवो भूतनाथश्चे'ति

**भूतनाशन** न० भूतान् नाशयति नश-णिच्-ल्यु। रुद्राक्षे। सर्षपे, भल्लातके च पु०।

**भूतपक्ष** पु० भूतप्रियः पक्षः अन्धकारवत्त्वात्। कृष्णपक्षे।

**भूतपत्री** स्त्री० भूत इव कृष्णं पत्रं यस्याः। कृष्णतुलस्याम्।

**भूतपुष्प** पु० भूत इव कृष्णं पुष्पं यस्य। श्योनाकवृक्षे।

**भूतभावन** पु० भूतानि पृथिव्यादीनि भावयति जनयति भू-णिच्-ल्यु, भूता सत्या यथार्था भावना यस्य वा। विष्णौ, वटुकभैरवे च 'भूतात्मा भूतभावन' इति। तयोः स्तोत्रे।

**भूतयज्ञ** पु० भूतान् प्राणिनो वायसादीन् उद्दिश्य यज्ञो बलिः। नित्यं गृहस्थकर्त्तव्यपञ्चयज्ञान्तर्गते बलिवैश्वदेव कर्म्मणि 'भूतेभ्यो बलिहरणं भूतयज्ञ' इति स्मृतिः।

**भूतल** न० भूरेव तलम्। पृथिव्याम्। ६त०। पाताले भूमेरधोभागे

**भूतलिका** स्त्री० भूतलं पातालं मूलत्वेनास्त्यस्याः ठन्। पृक्का-याम् (पिड़िङ्शाक) बहुदूरगमूलत्वात्तस्यास्तथात्वम्।

**भूतवास** पु० ६त०। (बयड़ा) बिभीतकवृक्षे। भूतावासादयोऽप्यत्र

**भूतशुद्धि** स्त्री० भूतानां देहारम्भकपृथिव्यादीनां शुद्धिर्भावना विशेषात् शोधनम्। तन्त्रादौ प्रसिद्धे देहारम्भकचतुर्विंशति तत्त्वानां भावनाविशेषेण संस्कारेण देवरूपतासम्पादने।

**भूतसार** पु० भूत इव कृष्णः सारोऽस्य। श्योनाकवृक्षे।

**भूतहन्त्री** स्त्री० भूतान् तद्भयं हन्ति हन-तृच् ङीप्। वन्ध्या-कर्कोट्यां, श्वेतदूर्व्वायाञ्च तद्धारणे हि स्त्रीणां प्रजाप्रति-रोधकभूतभयनाशः।

**भूतहर** पु० भूतान् हरति अपसारयति हृ-अच्। गुग्गुलौ

**भूतहारिन्** पु० भूतान् हरति स्थानान्तरं नयति हृन-णिनि। देवदारुवृक्षे। [स्वनामख्याते वृक्षे

**भूताङ्कुश** पु० भूतानां पिशाचानामङ्कुश इवापसारकत्वात्।

**भूतात्मन्** पु० भूतानि पृथिव्यादीनि पञ्च द्रव्याणि आत्मा स्वरूपं यस्य। देहे। भूतानि पञ्च द्रव्याणि भूताः प्राणिनश्च आत्मा स्वरूपं यस्य। परब्रह्मणि, 'सर्व्वं खल्विदं ब्रह्म तज्जला-नि'ति श्रुतिः। सर्व्वभूतात्मके हिरण्यगर्भे, विष्णौ, वटुक भैरवे च 'भूतात्मा भूतभावन' इति तयोः स्तोत्रे।

**भूतारि** पु० ६त०। हिङ्गौ तद्गन्धेन हि भूतापसरणम्।

**भूताली** स्त्री० भूतानीव अलति पर्य्याप्नोति अल-अच् गौरा० ङीप्। भूमिपाटल्यां, सूपल्याञ्च। [बिभीतकवृक्षे च

**भूतावास** पु० भूतानां प्राणिनामावासः अधिष्ठानत्वात्। विष्णौ,

**भूति** स्त्री० भू-क्तिन्। भस्मनि, अणिमाद्यष्टविधैश्वर्य्ये, शिवाङ्ग भस्मनि, भूषणे, सम्पत्तौ, जात्यां, वृद्धिनामौषधे च।

**भूतिक** पु० भूत्या सम्पत्त्या कायति कै-क। भूनिम्बे, यमान्याञ्च चन्दने, कट्फले कत्तृणे च न०। पृ०व० दीर्घः। भूतीकोऽप्यत्र

**भूतृण** न० भुवः तृणं गन्धवत्त्वात् (गन्धखड) तृणभेदे। रोहि-षतृणे पु०। [कण्यांम् (उन्दुरकानि)

**भूदरीभवा** स्त्री० भूदर्य्यां भूमिबिले भवति भू-अच्। आखु-

**भूदार** पु० भुवं दृणाति खनति मुस्ताद्यर्थम् दॄ-अण्। शूकरे

**भूदेव** पु० भुवि देव इव। विप्रे।

**भूधर** पु० भुवं धरति धृ-अच्। पर्व्वते। [लक्ष्याम्

**भूधात्री** स्त्री० भुवि लग्ना धात्री आमलकी शाक०। भूम्याम-

**भूनिम्ब** पु० भुवि लग्नः निम्बः शाक०। (चिराता) क्षुपभेदे।

**भूनीप** पु० भुवि लग्नो नीपः शाक०। भूमिकदम्बे।

**भूप** पु० भुवं पाति पा-क। भूमिपाले भूमिपादयोऽप्यत्र।

**भूपद** पु० भुवि पदं मूलं यस्य। वृक्षमात्रे। मल्लिकायां स्त्री० ङीप्

**भूपलाश** पु० भुवि पलाशं यस्य। विशल्यकारके क्षुपभेदे

**भूपाल** पु० भुवं पालयति पाल-अण्। भूपतौ।

**भूपेट** पु० भूपस्येटः। राजादनीवृक्षे (पियासाल) तद्वीजस्य चिरञ्जि इति ख्यातस्य राजप्रियत्वात्तथात्वम्।

**भूभुज्** पु० भुवं भुङ्क्ते भनक्ति पालयति वा भुज-क्विप्। भूपाले

**भूभृत्** पु० भुवं बिभर्त्ति धारयति, पालयति वा भृ-क्विप्। पर्व्वते, भूपाले च।

**भूमन्** पु० बहोर्भावः इमनिच् नि० बहोर्भादेशः। बहुत्वे।

**भूमि(मी)** स्त्री० भवन्त्यस्मिन् भूतानि भू-मिक् वा ङीप्। पृथि-व्याम्, स्थानमात्रे, जिह्वायां, योगशास्त्रोक्ते योगिनां चित्त-स्यावस्थाभेदे, एकसङ्ख्यायाञ्च।

भृङ्गप्रिया स्त्री० ६त०। माधवीलतायां मधुरमधुमत्त्वात् तत्-प्रियत्वम्। [नलोपः। भृङ्गराजे (केशुरिया)।
भृङ्गरज पु० भृङ्गान् रञ्जयति अन्तर्भूतण्यर्थे रन्ज-अच् पृ०
भृङ्गरजस् पु० भृङ्गान् रजयति अन्तर्भूतण्यर्थे रन्ज-असुन् नलोपः। भृङ्गराजे। [(केशुरिया)। क्षुपभेदे।
भृङ्गराज पु० भृङ्गान् रजयति रन्ज-णिच-कनिन् नि०।६त०।
भृङ्गरिट(टि) पु० भृङ्गइव रटति अच्, इन वा पृ०अतइत्त्वम्। शिवपार्श्वचरभेदे। [भेदे
भृङ्गरोल पु० भृङ्गइव रौति रु-लच्। (भीमरुल) ख्याते कीट
भृङ्गवल्लभ पु० ६त०। धाराकदम्बे, भूमिकदम्बे च। भृङ्गइव वल्लभः। भूमिजम्ब्वाम् स्त्री०। [यूथिकायाम् (युइ)
भृङ्गानन्दा स्त्री० भृङ्गान् आनन्दयति आ+नन्द+णिच्-अच्।
भृङ्गाभीष्ट पु० अभि+इष क्त ६त०। आम्रवृक्षे।
भृङ्गार पु० विभर्त्ति जलं भृ-आरक् नि०। स्वर्णमयजलपात्रे, जलपात्रभेदे च (झारी)। भृङ्ग इव ऋच्छति ऋ-अच्। भृङ्गराजे। लवङ्गे, सुवर्णे च न०। झिल्लीनामकीटे स्त्री० गौरा०ङीष्। स्वार्थे कन्। तत्रैव।
भृङ्गि पु०भृ-गिक् नुट् च। शिवपार्श्वचरभेदे।
भृङ्गिन् पु० भृङ्ग अस्त्यर्थे इनि। शिवपार्श्वचरभेदे वटवृक्षे च।
भृङ्गी स्त्री० भृ-गन् कित् नुट् च गौरा०ङीष्। अतिविषायाम्
भृङ्गीफल पु० भृङ्ग्या अतिविषाया इव फलमस्य। आम्रातके
भृङ्गेष्टा स्त्री० ६त०। घृतकुमार्यां,भार्ग्यां, तरुण्यां, काकजङ्घायाञ्च
भृज भर्ज्जने भ्वा० आत्म० सक० सेट्। भर्ज्जते अभर्ज्जिष्ट। निष्ठायां नेट् भृक्तः। [(भाजनाखोला) भर्ज्जनपात्रभेदे
भृज्जन पु० भृज्जातेऽनेन भ्रस्ज-ल्युट् पृ० संप्रसारणम्।
भृतक त्रि० भृ-क्त स्वार्थे कन्। वेतनेन कर्मकरे, 'भृतकाध्यापको यश्चे'ति मनुः। [मूल्ये च।
भृति स्त्री०.भृ-क्तिन्। भरणे, पोषणे च। करणे क्तिन्। वेतने,
भृतिभुज् त्रि० भृतिं वेतनं भुङ्क्ते भुज-क्विप्। वेतनोपजीविनि कर्मकरे।
भृत्य पु०भृ-क्यप् तुक् च। दासे।भरणीये त्रि०। भावे क्यप्। भरणे स्त्री०टाप्। 'कुमारभृत्याकुशलै'रिति रघुः।
भृ(भ्र)मि पु० भ्रम-इन् पृ०वा संप्रसारणम्। (घूर्णी) वायुभेदे, भ्रमणे च। 'किमु चक्रभ्रमिकारिता गुण' इति नैषधम्
भृश अधःपतने दि०पर०अक० सेट्। भृश्यति। अभृशत् अभशीत्। क्त्वा वेट्।
भृश न० भृश-क। अतिशये। तद्वति त्रि०।
भृष्ट त्रि० भ्रस्ज-क्त। जलोपसेकं विना वालुकाग्निसंयोगेन पक्वे

भॄ भर्ज्जने भर्त्सने भरणे च क्र्यादि०प्वा०पर०सक०सेट्। भृणाति अभारीत्। [मण्डूकपर्ण्यां स्त्री० ङीप्।
भेक पु० भी-कन् कस्य नेत्त्वम्। (व्याङ) जन्तुभेदे, मेघे च।
भेकपर्णी स्त्री० भेकइव पर्णमस्याः ङीप्। मण्डूकपर्ण्याम्
भेड पु० भी-ड तस्य नेत्त्वम्। मेषे, (भेड़ा)
भेद पु० भिद-घञ्। पृथक्करणे अन्यतो विशेषे, राज्ञां विपक्षनाशनार्थं तत्पक्षीयामात्यादिभेदने, न्यायमतोक्ते अन्योन्याभावे च यथा घटात् पटस्य भेदः (तादात्म्येनाभावः)
भेदक त्रि० भिद-ण्वुल्। रेचके, विदारके,भेदकारके, विशेषणे च
भेदन त्रि० भेदयति भिद-णिच् ल्यु। विरेचने, विशेषणे च हिङ्गौ अम्लवेतसे पु० न०। भिद-भावे ल्युट्। विदारणे
भेदित त्रि०भिद-णिच्-क्त। विदारिते,भिन्ने च। [यदि'त्यमरः
भेद्य त्रि०भिद-ण्यत्। विदार्ये विशेष्ये च। 'विधेयं भेद्यगामि
भेरि(री) स्त्री० भी-क्रि वृद्ध्या० नि० वा ङीप्। इहढक्कायाम् पटहे 'रवः प्रगल्भाहृतभेरिसम्भव' इति कुमारः इत्युज्ज्वलदत्तः 'ततः शङ्खाश्च भेर्य्यश्चे'ति गीता।
भेल पु० भी-रन् रस्य लः। नद्यादितारणार्थे प्लवे (भेला) ख्याते, मटार्थे। स्वार्थे कन् तत्रैव। [चङि न ह्रस्वः
भेष भये भ्वा०उभ०अक०सेट् भेषति ते अभेषीत् अभेषिष्ट।
भेषज न० भेष-घञ् भेषं रोगभयं जयति जि-ड। औषधे।
भेषजाङ्ग न० ६त०। औषधस्य अनुपेये वस्तुनि।
भैक्ष न०भिक्षैव तत्समूहो वा अण्। भिक्षायां, भिक्षासमूहे च
भैक्षचर्य्या स्त्री० चर-भावे क्यप् ६त०। भिक्षाक्रियाकरणे।
भैक्ष्य न० भिक्षाणां समूहः ष्यञ्। भिक्षासमूहे।
भैमी स्त्री० भीमेनोपासितां तस्येदं वा अण् ङीप्। माघशुक्लैकादश्याम्, भीमराजस्य पुत्र्यां दमयन्त्याञ्च। 'विहाय भैमीमपदर्पया कये'ति नैषधम्।
भैरव न०भीरोरिदम् अण्। भये, तद्वति त्रि०। नाट्यादिप्रसिद्धे भयानके रसे। भयसाधने त्रि०स्त्रियां ङीप्। शङ्करे,तदवतारभेदे रागभेदे, नदभेदे च पु०। शिवपत्न्यां स्त्री०ङीप्
भैषज्य न० भेषजमेव भिषजः कर्म वा ष्यञ्। औषधे।
भो अव्य० भा डो। सम्बोधने।
भोग पु० भुज-कर्म्मादौ घञ्। सुखे, सुखदुःखाद्यनुभवे, पण्यस्त्रीणां भाटकादिरूपे वेतने,सर्पस्य फणायां, तत्काये, धने, पालने,आहारे च। अर्श आद्यच्। सर्पे। आधारे घञ्। देहे,माने च। ज्योतिषोक्ते ग्रहाणां तत्तद्राशिस्थितौ,भूम्यादिषु उत्पन्नद्रव्यविनियोगे,उपभोगविनियोगे च 'वस्तूनामविशक्तानां भोगं नैव प्रदापयेदि'ति स्मृतिः।

**भोगदेह** पु० भुज्यते सुखदुःखादिकमत्र भुज-आधारे घञ् कर्म०। पुण्यपापफलभोगार्थे देहे, 'प्रेतदेहं परित्यज्य भोगदेहं प्रपद्यते' इति स्मृतिः।

**भोगभूमि** स्त्री० भोगस्यैव भूमिः स्थानं। भारतवर्षातिरिक्ते वर्षे तत्र हि भोगएव न कर्म इति शास्त्रे स्थितम्।

**भोगवती** स्त्री० भोगः सर्पशरीरं भूम्नाऽस्त्यस्याम् मतुप् मस्य वः। पातालगङ्गायाम् 'भोगवती च पाताले' इति पुराणम्।

**भोगिन्** पु० भोग+अस्त्यर्थे इनि। सर्पे, नृपे, ग्रामाध्यक्षे, नापिते च। भोगयुक्ते त्रि०। भोगवदादयः सर्पे। भोगयुक्ते त्रि०

**भोगिवल्लभ** पु० ६त०। चन्दने।

**भोगीन्द्र** पु० भोगिनामिन्द्रः स्वामित्वात्, भोगी इन्द्र इव वा; अनन्तदेवे वासुकौ च भोगीशादयोऽप्यत्र।

**भोग्य** न० भुज-ण्यत् कुत्वम्। धने, धान्ये च। भोगार्हे त्रि०। भोगार्हस्त्रियां, वेश्यायाञ्च स्त्री०।

**भोज** पु० भुज-अच्। स्वनामख्याते देशभेदे धारापुरस्य नृपभेदे 'धन्यः श्रीभोजराजस्त्रिभुवनविजयी'त्युद्भटः।

**भोजकट** पु० भोजाख्ये देशे।

**भोजन** न० भुज-ल्युट्। कठिनद्रव्यस्य गलविलाधःसंयोजने।

**भोज्य** त्रि०भुज-ण्यत् भक्षणार्थत्वान्न कुत्वम्। भक्षणीयद्रव्यमात्रे

**भोटाङ्ग** पु० (भोटान) देशभेदे।

**भोस्** अव्य० भा-डोसि। सम्बोधने,प्रश्ने विषादे च।

**भौतिक** त्रि० भूतानि पृथिव्यादीनि पिशाचान् वा अधिकृत्य जातानि ठक्। भूताधिकारेण जाते उपद्रवे व्याध्यादौ।

**भौम** पु० भूमेरपत्यं तस्या इदं वा अण्। नरकासुरे 'त्वयि भौमं गते जेतुमि'ति माघः। मङ्गलग्रहे च। भूमिभवे त्रि०।

**भौमरत्न** न० भौमप्रियं रत्नं शाक०। प्रवाले।

**भौमिक** त्रि० भूमौ अधिकृतः ठक्। भूम्यधिकारिणि।

**भौरिक** त्रि० भूरिणि स्वर्णे अधिकृतः ठन्। स्वर्णाध्यक्षे।

**भ्यस** भये भ्वा०आ०अक०सेट्। भ्यसते अभ्यसिष्ट।

**भ्रण** शब्दे भ्वा०पर०सक०सेट्। भ्रणति अभ्राणीत् अभ्रणीत्

**भ्रकुं(ग)स** पु० भ्रुवा कुं(गां)सा यस्य पृ०नि०। भ्रकुंसशब्दार्थे।

**भ्रकुटि(टी)** स्त्री० भ्रुवः कुटिर्भङ्गः पृ० वा ङीप्। भ्रूभङ्गे।

**भ्रश** चलने भ्वा० पर०सक०सेट्। भ्रमति अभ्रमत् अभ्रमीत्

**भ्रम** चलने दिवा०पर०सक०सेट् शमा०। भ्राम्यति अभ्रमीत्

**भ्रम** चलने, भ्वा०पर०अक०सेट्। भ्रमति अभ्रमीत् फणा० भ्रेमतुः बभ्रमतुः (चङि न लुक्ः। ज्वला०भ्रमः भ्रामः।

**भ्रम** पु० भ्रम-घञ्। मिथ्याज्ञाने (अन्यथाभूतस्य वस्तुनोऽन्यथारूपेण ज्ञाने) जलनिर्गमस्थाने,कुन्दे, (कुंद) भ्रमणे च।

**भ्रमर** पु० भ्रम-करन्। मधुकरे।

**भ्रमरक** पु० भ्रमर इव कायति कै-क। ललाटलम्बिते भ्रमरतुल्ये चूर्णकुन्तले। स्वार्थे कन्। भ्रमरे, भृङ्गे, बालमृषिकायाञ्च

**भ्रमरप्रिय** पु० ६त०। धाराकदम्बे।

**भ्रमरातिथि** पु० भ्रमरः अतिथिर्यस्य। चम्पके।

**भ्रमरानन्द** पु० भ्रमरान् आनन्दयति आ+नन्द-णिच्-अच्। वकुले। [ललाटस्थिते भ्रमरतुल्ये चूर्णकुन्तले।

**भ्रमरालक** पु० भ्रमर इव अलति पर्याप्नोति अल-ण्वुल्।

**भ्रमरी** स्त्री० भ्रम-करन् गौ०ङीप्। जतुकायां भ्रमरभार्य्यायाञ्च

**भ्रमरेष्ट** पु० ६त०। श्योनाकवृक्षे। भार्ग्यां भूमिजम्ब्वाञ्च स्त्री०

**भ्रमरोत्सवा** स्त्री०भ्रमराणामुत्सवो मोदोऽत्र। माधवीलतायाम्

**भ्रश** अधःपतने दि०पर०सक०सेट्। भ्रश्यति अभ्राशीत् अभ्रशीत्। क्त्वा वेट्।

**भ्रष्ट** त्रि० भ्रश-क्त। च्युते अधःपतिते। [बभ्रज्ज

**भ्रस्ज** पाके तु०उ०सक०अनिट्। भृज्जति अभ्राक्षीत्। बभर्ज-

**भ्राज** दीप्तौ भ्वा०आत्म०फणा०अक०सेट्। भ्राजते अभ्राजिष्ट भ्रेजे बभ्राजे। चङि वा ह्रस्वः। अबु भ्राजथुः।

**भ्राजिष्णु** त्रि० भ्राज-इष्णुच्। दीप्तिशीले।

**भ्रातृ** पु० भ्राज-तृच् पृ०। एकपितृजाते (भाइ) इति ख्याते स्वस्रा सहोक्तौ। भ्रातृभगिन्योः द्वि०व०।

**भ्रातृज** पु०भ्रातुर्जायते जन-ड। भ्रातुष्पुत्रे। तत्कन्यायां स्त्री०

**भ्रातृव्य** पु० भ्रातुः पुत्रः भ्रातृ+व्यत्। भ्रातुष्पुत्रे, शत्रौ च

**भ्रातृश्वशुर** पु०भ्रातापि पत्युर्ज्येष्ठभ्रातापि श्वशुरस्थानीयत्वात् पितृतुल्यत्वात्। (भासुर) भर्त्तुर्ज्येष्ठभ्रातरि 'भर्त्तृश्वशुरता ज्येष्ठे' इति भारतान्तरम्। [त्रि०

**भ्रातीय** पु०भ्रातुरपत्यमिदं वा छ। भ्रातुष्पुत्रे भ्रातृसम्बन्धिनि

**भ्रान्त** न० भ्रम-भावे क्त। भ्रमणे 'जनस्थाने भ्रान्तमि'ति नाटकम्। कर्त्तरि क्त मिथ्याज्ञानयुक्ते, भ्रमणयुक्ते च त्रि०। धुस्तूरे पु०।

**भ्रान्ति** स्त्री० भ्रम-क्तिन्। भ्रमणे, अयथार्थज्ञाने च।

**भ्रान्तिमत्** पु० अलङ्कारोक्ते अर्थालङ्कारभेदे।

**भ्रामक** पु० भ्रमयति भ्रम-ण्वुल्। शृगाले, धूर्त्ते, सूर्य्यावर्त्ते मणौ, अयस्कान्ते प्रस्तरे च।

**भ्रामर** न० भ्रमरेण संभृतं सम्पादितम् तस्येदं वा अण् मधुनि। भ्रमरसम्बन्धिनि त्रि० अयस्कान्ते पु०। 'भ्रामरं रूपं कृत्वाऽसंख्येयषट्पद'मित्युपक्रम्य 'भ्रामरीति च मां लोकाः' इति चण्डीमाहात्म्ये चण्डीमूर्त्तिभेदे।

**भ्राश** भासे भ्वा०प०फणा०अक०सेट्। भ्राशति भ्राश्यति अभ्रा-

